# तस्मादनित्या एवेति
# वर्णाः सर्वे मतं हि नः ॥१६८॥

# इति श्रीविश्वनाथपञ्चाननकृता
# कारिकावली समाप्ता ॥

तमित्यादिदर्शनादिति भावः ।

इति श्रीमहामहोपाध्यायविद्यानिवासभट्टाचार्यपुत्र श्रीयुतविश्वनाथपञ्चाननभट्टाचार्यविरचितायां सिद्धान्तमुक्तावल्यां गुणनिरूपणम् । समाप्तश्चायं ग्रन्थः ॥

न च भेर्याकाशसंयोगकण्ठाद्याकाशसंयोगादीनां शब्दं प्रति कारणत्वे मानाभाव इति वाच्यम् भावकार्यस्यासमवायिकारणजन्यत्वनियमेन तत्कारणत्वस्वीकारात् । तादृशनियमे मानाभावे तु मास्तु तेषां कारणत्वं भेरीदण्डसंयोगादिनिमित्तकारणसहकृतेनाकाशेनैव शब्दोत्पत्तिसम्भवादिति । प्रथमादिशब्दानां च स्वकार्यशब्देनैव नाशः चरमस्य तूपान्त्यशब्देनोपान्त्यशब्दनाशेन वा नाश इति । मूले तदेवौषधमित्यादिना सैवेयं दीपकलिकेत्यादेः परिग्रहः । ननु तत्रापि व्यक्त्यभेद एव विषयोऽस्त्वतो भावार्थं प्रकाशयति यदौषधं मया कृतमित्यादिना । अत्र च स्वकर्तृकत्वस्वाभिन्नकर्तृकत्वरूपविरुद्धधर्माध्यासायितभेदप्रत्ययस्य प्रतिबन्धकस्य सत्त्वान्न व्यक्त्यभेदो विषयः किं तु तत्सजातीयाभेदो विषय इति भावः । भानुं प्रणम्य परिभाव्य च शास्त्रसारं मुक्तावलीकिरण एष पितृप्रदिष्टः । सदुक्तिभिर्दिनकरेण करेण सोऽयं नीतः प्रकाशपदवीं सुधियां मुदेऽस्तु॥ मुक्तावलीप्रकाशो यः स्वाज्ञानतिमिरापहः । तेन सन्तोषमायातु नीलकण्ठः सतीप्रियः॥ इति श्रीभारद्वाजकुलाम्बुधिपूर्णचन्द्रबालकृष्णभट्टात्मजमहादेवभट्टतनूजश्रीमद्दिनकरभट्टविरचिते न्यायसिद्धान्तमुक्तावलीप्रकाशे गुणनिरूपणम् ॥

समाप्तश्चायं ग्रन्थः ॥

# विज्ञापन ।

जिस महाशय को यह पुस्तक अपेक्षित हो काशी में कचौरीगली मे कुंजगली के पश्चिम फाटकपर गोवर्धनरामसाव रामलालसाव के दुकान से मंगालेवें ।